# वैदिकविद्याभ्यासे प्राचीनाधुनिकपद्धत्योः विमर्शः

Dr Girijaprasad Shadangi,
Dept of Samaveda
Sri Venkateswara Vedic University, Tirupati
gpshadangi@gmail.com, Mo-9951051209

देशस्य विकासाय शिक्षायाः महती आवश्यकता वर्तते। शिक्षामाध्यमेन समाजे, परिवारे, तथा देशे सुसंस्कृत-भावनायाः विकासः भवति। उत्तमशिक्षा सर्वान् जीवने अग्रे नयति तथा सफलतां प्रापयति। अनेन आत्मविश्वासः विकसति तथा व्यक्तेः व्यक्तित्वनिर्माणे साहाय्यं भवति। विद्याभ्यासार्थं गुरुकुलवासः महतीं भूमिकां निर्वहति। शिक्षातन्त्रं पूर्णतया त्रिविधं विभज्यते। यथा प्राथमिकशिक्षा माध्यमिकशिक्षा तथा उच्चशिक्षा इति। प्राथमिकशिक्षा छात्राणामाधारं प्रददाति, या जीवने सर्वदा साहाय्यं करोति। माध्यमिकशिक्षा अग्रे पठितुं मार्गं प्रशस्तं करोति। उच्चशिक्षा भविष्यत्काले जीवने पाथेयं भवति। उत्तमशिक्षा तथा अधमशिक्षा निर्धारयति यद्वयं भविष्ये कथं व्यक्तित्वसम्पन्नाः भविष्यामः इति।

आधुनिककाले सर्वेषां कृते शिक्षायाः नितान्तं आवश्यकत्वं वरीवर्ति। उच्चशिक्षायाः महत्वमुच्चपदव्यास्तथा वृत्तिप्राप्त्यर्थमेवोपयुज्यते। परन्तु उत्तमशिक्षा भविष्यत्काले अग्रे गन्तुं मार्गनिर्माणं करोति। अस्माकं ज्ञानस्य स्तरेण, प्रयोगकौशल्येन तथा वृत्या उच्चपदवीप्राप्तिद्वारा च वयं सामाजिक-मानसिक-बौद्धिकरूपेण बलशालिनः भवेम। प्रत्येकमपि बालः स्वजीवने किमपि कर्तुं स्वप्नं पश्यति। कदाचित् मातापितरौ अपि स्वसन्तानम् अग्रे वैद्यः, अभियन्ता, आचार्यः इत्यादि भवतु इति कांक्षतः। एतेषां सर्वेषां स्वप्नानां सिद्ध्यर्थं उत्तममार्ग एव उत्तमा शिक्षा इति ।

जगति विद्यमानास्सर्वे मानवास्स्वानुगुणं विद्यायाः अध्ययनं कुर्वन्ति। विद्या द्विविधा भवति। पारम्परिका आधुनिकी इति। पारम्परिकविद्या प्राचीनकालात् इदानीं पर्यन्तं तत्र तत्र गुरुकुल-पाठशालाश्रममठादिभिः प्रचाल्यते। आधुनिकीं विद्यां विद्यालयविश्वविद्यालयादयः वर्धयन्तः सन्ति।

विद्याध्ययनं त्रिविधं वर्तते। प्रथमं तावत् गुरुकुले स्थित्वा गुरशुश्रुषया, द्वितीयं गुरवे धनं दत्वा , तृतीयं परस्परं विद्यादानप्रदानेन भवति। चतुर्थोपायः नास्ति इति शिक्षाशास्त्रविदः वदन्ति। इदानीन्तनकाले द्वितीयं प्रकारं प्रसिद्धरूपेण स्वीक्रियते। विद्यासंस्थायै विपुलं धनं प्रदाय विद्याध्ययनं करणीयं भवति। नान्यः पन्था विद्यते । इतोपि वर्तमानकाले विद्याभ्यासस्य क्रमः परिवर्तितः। अत्र गुरुं विना दूरस्थविद्यामाध्यमेन उच्चविद्यायाः ग्रहणं साध्यम्।

गौतमेन उक्तम् अयोग्यात् उपाध्यायात् अधीतं ज्ञानं जीवने सफलतां न ददाति। अतः ज्ञानार्जनाय, सफलतायै योग्यः गुरुः अन्वेषणीयः। तस्मात् प्राप्तज्ञानात् उज्वलजीवनं लभ्यते। अतः यत्र कुत्रापि पठनं यस्य कस्यापि समीपे अध्ययनं तथा यं कमपि गुरुरूपेण स्वीकार्यं सर्वथा न कार्यम्। उक्तञ्च-आचार्यज्ञातिप्रियगुरुधनविद्यानियमेषु ब्रह्मणः सम्प्रदानमन्यत्र यथोक्तात्।। (गौ.ध.सू.2.1.4)

ब्रह्म वेदः , आचार्यः, भ्रातृपितृव्यादयः, सखा, मातुलादयः, एतेषु वेदः सम्यक् प्रदेयः। धनविद्यानियमेषु धनेन विद्यायाः परिवर्तनं धननियमः, विद्यान्तरेण परिवर्तनं विद्यानियमः, तेष्वपि ब्रह्म सम्प्रदेयम् इति।

**1.गुरोर्लक्षणं स्थानञ्च-**

वैदिकविद्यायाः अध्ययने गुरोस्स्थानं उत्तमं भवति। सद्गुरोर्लक्षणं गौतमेन उक्तम्-**सत्यधर्माः** इति । (गौ.ध.सू.1.9.70) गुरुः सत्यवचनस्तथा सत्यस्वभावयुक्तः स्यात्। इतोपि **शिष्टाध्यापकः** (गौ.ध.सू.1.9.70 ) सतामध्यापयिता न त्वयोग्यानाम्।। **शौचशिष्टः** (गौ.ध.सू.1.9.71)। शास्त्रविहिता शौचादि नियमाः पालनीयाः । **श्रुतिनिरतः स्यात्** (गौ.ध.सू.1.9.72)।। सर्वदा वेदाभ्यासरतः स्यात् । **नित्यमहिंस्रो मृदुर्दृढकारी दमदानशीलः** (गौ.ध.सू.1.9.73)।। नित्यं अहिंसाशीलः, मृदु अर्थात् सहिष्णुः, क्षमाशीलः, दृढनिश्चयः,संयमी तथा दानशीलः स्यात्। एवं गुणसम्पन्नं गुरुं प्राप्य शिष्यः समग्रां विद्यां अधीते चेत् सा विद्या अवश्यं फलवती भवति। गुरूणां पित्रादीनां मध्ये उक्तलक्षणः आचार्यः श्रेष्ठः। स हि विद्यातस्तं जनयति तच्छ्रेष्ठं जन्म। तेनानेकगुरुसमवाये स एव प्रथमं पूज्यः।

**2.विद्याध्ययने अयोग्याः-**

नारदेन वैदिकविद्यायाध्ययने अयोग्यानां विषये एवमुक्तम्-

पञ्च विद्यां न गृह्णन्ति चण्डा स्तब्धाश्च ये नराः।

अलसाश्च सरोगाश्च येषाञ्च विसृतम्मनः।। (ना.शि.2.8.14)

(चण्डाः)कोपप्रधानाः उपाध्यायादीनामनुप्रवृत्तिं न भजन्ते,( स्तब्धाः) स्वचातुर्येण अध्ययने प्रवृत्ताः, (अलसाः ) उक्तमपि कदापि तावन्न बुध्यते, (रोगयुक्तः) सर्वकाले रोगयुक्तः,(विसृतं)चञ्चलं मनः विद्याध्ययने अयोग्याः भवन्ति।

**3.विद्यार्थिनियमाः-**

प्रातरारभ्य रात्रिपर्यन्तं नित्यकर्मानुष्ठानादि कुर्वन्तः विद्याभ्यासे निरताः भवेयुः । विद्यार्थिभिः अनुसरणीयाः नियमाः पालनीयाः। अनेन तस्य औन्नत्यं भवति। स्वेच्छया विहरणं कर्तुं , स्वेच्छया वाग्वादं, स्वेच्छया भोजनादि च कर्तुं नानुमन्यते। एतदर्थं उच्यते-**वाग्बाहूदरसंयतः** (गौ.ध.सू.1.2.27)।। विद्यार्थी नाधिकं वदेत्, बाहुसंयमः, तथा परिमितभोजनं कुर्यात्। अनेन तस्य शक्तेः दुरुपयोगस्तथा आलस्यरहितः भूत्वा सम्यग् विद्यां लब्धुं शक्यते।

विद्यार्थीभिः केचन विषयाः त्याज्याः। गौतमेन एवमुच्यते-

वर्जयेन्मधुमांसगन्धमाल्यदिवास्वप्नाञ्जनाभ्यञ्जनयानोपानच्छत्रकामक्रोध-

लोभमोहवादवादनस्नान दन्तधावनहर्षनृत्यगीपरिवादभयानि।। (गौ.ध.सू.1.2.19)इति

विद्यार्थी मधु,मृगादेः मांसं, चन्दनादि गन्धं,पुष्पादिना कृतमाल्यानि, दिवानिद्रा, अक्ष्णोः अञ्जनं, तैलाभ्यङ्गः, शकटादि यानं, स्त्रीसङ्गः, क्रोधः, द्रव्याभिलाषः, विवेकशून्यता, बहुजल्पः, वीणादीनां वादनं, द्यूतक्रीडा, सुखार्थमुष्णतोयादिना स्नानं,मदकरद्रव्यं, नृत्यगीतं, परदोषकथनं वर्जयेत्। एतत् सर्वं परित्यजेत्। अत्र सामवेदीयब्राह्मणेपि उच्यते- मा दिवा स्वाप्सीः इति , दिवा शयनं न करणीयम्।

**4.अध्ययनकालः-**

वैदिकसम्प्रदायानुसारेण विद्यासम्पादनार्थं कालनिर्णयः तथा आचरणनियमाः एवमुच्यन्ते-

द्वादशवर्षाण्येकवेदे ब्रह्मचर्यं चरेत्।। (गौ.ध.सू.1.2.41)

यद्यपि एकस्यैव वेदस्य बह्व्यः शाखाः। तथापि एकवेदाध्ययनार्थं द्वादशवर्षाणि गुरुकुले ब्रह्मचर्यं चरेत्। कियत्कालं गुरुकुले स्थातव्यं इति प्रश्ने- **ग्रहणान्तं वा** ( गौ.ध.सू.1.2.53)।। यावता कालेनैको वेदो ग्रहीतुं शक्यस्तावता कालं स्थातव्यम्।

अत्र प्रश्नमागच्छति वेदविद्यायाः अध्ययनाध्यापने के योग्याः ? उच्यते- द्विजातीनामध्ययनमिज्या दानम्( गौ.ध.सू.2.1.1)।। उपनीतब्राह्मणक्षत्रियवैश्याः द्विजातयः। एतेषां धर्मं तावत् वेदग्रहणरुपमध्ययनम्, यजनं तथा दानमिति। ब्राह्मणस्याधिकाः प्रवचनयाजनप्रतिग्रहाः (गौ.ध.सू.2.1.2)।। ब्राह्मणानामध्यापनं कार्यं मुख्यत्वेन भवति। अनेन सिध्यति यत् शिक्षार्थं सर्वे योग्याः । परन्तु केषाञ्चनकृते अध्यापनकार्यं शास्त्रेण प्रतिपादितम्। अत्र गुणधर्मयोग्यता एव प्रधानम्। न तु व्यक्तिविशेषः।

**5.विद्याध्ययनपद्धतिः-**

गुरुणा आहूतः शिष्यः गुरुसमीपं आगत्य विद्यां अधीयात्। उच्यते खलु- **आहूतोध्यायी** (गौ.ध.सू.1.2.35)।। गुरुणाहूतः सन्नधीयीत न तु स्वयं चोदयेदिति। **युक्तः प्रियहितयोः** (गौ.ध.सू.1.2.36) आचार्यस्य यत् प्रियं हितं च तत्र युक्तः,तत्परश्च स्यात्। प्रियं तत्काल प्रीतिकरम्, हितं कालान्तरे तत्करम्। अनया पद्धत्या गुरुसमीपे प्राचीनकाले विद्यार्थिभिः विद्या अधिगता।

**6.विद्यार्थीनामनुशासनपद्धतिः-**

शासितुं योग्यः शिष्यः। यः गुरोः आज्ञानुवर्ती भवति सः सकलगुणसम्पन्नः सन् समस्तविद्यां करगतं करोति। अस्मिन्विषये उपनिषदादिषु बहुत्र उपाख्यानरुपेण निदर्शितम्। अतः विद्यार्थी कथं भवेत् इत्यत्र एवमुच्यते- **शिष्यशिष्टिरवधेन** (गौ.ध.सू.1.2.48)।। अताडयता गुरुणा भर्त्सनादिभिः शिष्यः शास्यः इति गौतममहर्षिवचनम्। तथैव अशक्तौ रज्जुवेणुविदलाभ्यां तनुभ्याम् (गौ.ध.सू.1.2.49)। यदि भर्त्सनादिभिः शासितुमशक्यस्ततो रज्ज्वा, वेणुना ताडयित्वापि शासनीयाः। यदि हस्तादिना क्रोधवशेन ताडयन्राज्ञा शास्य आचार्यः (गौ.ध.सू.1.2.50) एवं प्रकारेण शास्त्रकारेण शिष्यस्य अनुशासनपद्धितिः उक्ता।

**7.विद्याभ्यासससमये भोजनीयः-**

वेदविद्यायाः अभ्यासार्थं शरीरस्य सौष्ठवं तथा बुद्धेः प्रखरता आवश्यकी। नारदीयशिक्षायां एवमुक्तम्-त्रिफलां लवणाख्येनयुतां भोजनावसरकालं सायं शिष्यो भक्षयेत्। जाठरमग्निं बुद्धिञ्चैषा जनयति। अग्निपाटवं स्वरवर्णसौष्ठवं भवतीति (ना.शि.2.8.6)।। अनेन विद्यार्थी सुस्वरेण युक्तस्सन् शरीरसौष्ठवसम्पन्नश्च भवति।

**8.गुरुसमीपे किं न करणीयम्-**

गुरुः इति पदेन पित्राचार्यादयः लक्ष्यन्ते। एतेषां समक्षं पादप्रसार्यावस्थानं, कण्ठाच्छ्लेष्मणः सशब्दं बहिर्निरसनं, हास्यम्, जृम्भिका, अङ्गुलीनाम्वस्फोटनादीनि न कार्याणि (गौ.ध.सू.1.2.20,21)। गुरौ आज्ञापयति सति प्रतिश्रवणं प्रतिवचनं कुर्वन् शय्यासनस्थानानि विहायाभिगच्छन् कुर्यात्।।

**9.विद्याग्रहणनियमाः-**

विद्या शनैःशनैः ग्रहणीया। उच्यते खलु –

शनैर्विद्यां शनैरर्थानारोहेत्पर्वतं शनैः।
शनैरेवाध्वगमनं योजनानां परिव्रजेत् (ना.शि.2.8.15)

यथा अर्थार्जनं, अध्ययनं, अध्वगमनं,पर्वतारोहणं यथा लोके शनैः क्रियते तथैव विद्यायाः ग्रहणं शनै शनैः करणीयः। अनेन विद्या दृढा सफला च भवति । किञ्चिदपि समयं व्यर्थमकृत्वा सर्वदा अध्ययनशीला भवेयुरिति। उच्यते खलु-

अञ्जनस्य क्षयं दृष्ट्वा वल्मीकस्य च सञ्चयम्।
अवन्ध्यं दिवसं कुर्याद्दानाध्ययनकर्मसु।। (ना.शि.2.8.20)

तात्पर्यं तावत् पर्वतस्य व्यये क्षयो दृश्यते। पिपीलिकादिभिः सञ्चयः क्रियते। तथैव सततप्रयत्नेन विद्या साधनीया अन्यथा पर्वतसदृशं ज्ञानं अचिरादेव नश्यति।

**10.छात्रावासव्यवस्था-**

प्राचीनभारते गुरोः प्रत्यक्षनिरीक्षणे विद्योपार्जनं श्रेष्ठमिति मन्यते स्म । अतएव अधिकांशः विद्यार्थी गुरुकुले एव निवसति स्म। गुरुणा स्वनिवासस्य समीपे विद्यार्थिनां आवास-निवासव्यवस्था क्रियते स्म। भोजनं भिक्षावृत्त्या सम्पद्यते अथवा अध्यापकस्य गृहे व्यवस्था क्रियते स्म। तत्समये एकस्यैव गुरोः समीपे प्रायः पञ्चदशविद्यार्थिनः पठनं कुर्वन्ति स्म । कदाचित् एकस्येव गुरुसमीपे चत्वारः विद्यार्थिनः अध्ययनं कुर्वन्ति स्म। अतः एतेषां भोजननिवासस्य व्यवस्था गुरुकृते कठिनं नासीत्। किन्तु विद्यार्थेः व्यवस्थाकर्तुं गुरौ असमर्थे विद्यार्थी स्वयमेव स्वस्य व्यवस्था करोति स्म।

अध्यापनार्थं विद्यार्थीसकाशात् धनयाचनं अध्यापकस्य कृते अत्यन्तं निन्दनीयं कर्म आसीत्। गुरुः निर्धनविद्यार्थी अपि पाठयति स्म। यः गुरुः अध्यापनार्थं धनं याचते अथवा व्यवसायवृत्या पाठ्यते तं यज्ञयागादिषु ऋत्विक्कार्ये अयोग्यं मन्यन्ते स्म। किन्तु गुरोः समीपे अधीतेन एकेनापि अक्षरेण शिष्यः ऋणी

मन्यते स्म। अतएव समावर्तनावसरे शिष्यः गुरदक्षिणारूपेण सामर्थ्यानुसारं धनं गुरवे ददाति स्म। यः अत्यन्तं निर्धनं जीवनं यापयति सः भिक्षायाचनं कृत्वा गुरवे निवेदयति स्म। वस्तुत: राज्ञां तथा श्रेष्ठिजनानां दायित्वं आसीत् यत् आचार्याणां विदुषां शिक्षणसंस्थां प्रति मुक्तहस्तेन धनप्रदानम्। अनेन प्राचीनकाले शिक्षणव्यवस्था गुरुकुले गुरुसमीपे निःशुल्कमासीत्।

**11.अध्ययनप्रशंसा-**

अधीतस्य ज्ञानस्य सर्वदा चिन्तनं करणीयम्। अयत्नेन यथा जलं उपरिस्थलात् निम्नस्थानं आगमिष्यति तथैव सतत अभ्यस्ता विद्या फलीभूता भवति। यथा खनन् भूतले जलं यथा विन्दति तथैव गुरुसमीपे अधीता विद्या उत्तमा भवति। (ना.शि.2.8.28) यद्यपि स्व मेधागुणैः विद्या लभ्यते तज्जीवने फलवती न भवति। वेदस्य सम्यगुच्चारणाय पथ्यसेवनं, सम्प्रदायागतस्वररक्षणावश्यकता, वेदस्य सम्यग्प्रयोगेण अनायासेन ब्रह्मलोकावाप्तिपर्यन्तफलप्राप्तिर्भवति।

**12.नारीणां कृते वैदिकीशिक्षाव्यवस्था-**

शिक्षा पुरुषाणां तथा स्त्रीणां कृते समानरुपेण देया। अनेन स्वस्थस्य तथा शिक्षितसमाजस्य निर्माणं भवति। राष्ट्रस्यापि प्रगतिर्भविष्यति। शिक्षितो नेता राष्ट्रस्य निर्माणं कृत्वा सफलतापूर्वकं प्रगतिपथं नयति। उत्तमशिक्षा मानवानामधिकारं, सामाजिकाधिकारं, देशं प्रति कर्तव्यनिष्ठां तथा दायित्वबोधने प्रेरणादानञ्च ददाति। उज्वलभविष्यनिर्माणाय आवश्यकोपकरणमेव शिक्षा। वयं जीवने शिक्षारूपोकरणं प्रयोगं कृत्वा किमपि सम्पादयितुं सक्षमाः भवेम।

नारीणां कृते शिक्षाव्यवस्था आसीत्। उत्तररामचरिते वाल्मीकिमहर्षेः आश्रमे आत्रेय्याः अध्ययनं दृश्यते। भवभूतिः मालतीमाधवस्य प्रथमाङ्के कामन्दक्याः गुरुकुलाध्ययनविषये वर्णयति। गुरुपत्न्याः, गुरुकन्यायाः अथवा गुरोः वध्वाः गुरुकुले अवस्थानकारणात् तैरेव अध्ययनस्य लाभः प्राप्यते। एतेषां कृते शास्त्राणां अध्ययनपरम्परा दृश्यते।

**13.सहशिक्षाव्यवस्था-**

प्रागैतिहासिककाले साहित्यदृष्ट्या तथा व्यावसायिकदृष्ट्या शिक्षायाः व्यवस्था आसीत्। तदर्थं भ्राता-भगिनी, भ्रातरौ मिलित्वा गुरूणां समीपे अध्ययनं कुर्वन्ति स्म। उत्तररामचरिते वाल्मीकेः आश्रमे लवकुशाभ्यां साकं आत्रेय्याः उल्लेखः,अस्याः पुष्टिं करोति। एवमेव मालतीमाधवकाव्ये भवभूतिः भूरिवसुना देवराजेन सह कामन्दक्याः अध्ययनमेकस्यामेव पाठशालायां जातमिति वर्णनामकरोत् । एवमेव पुराणे कहोढसुजातयोः तथा रुहूप्रमदावारयोश्च सहाध्ययनं स्मर्यते। अनेन ज्ञायते यच्छात्राः छात्राश्च एकत्रैव पठन्त आसन्निति।

अध्ययनस्य प्रथमं स्थानं गृहम्। तत्र मातापितरौ एव प्रथमशिक्षकौ। तेभ्यः बालशिक्षा लभ्यते। तदनु गुरुकुलवासः गुरुसमीपे अध्ययनमिति प्राचीनसम्प्रदायः। इदानीं वैदिकविद्यापि गुरुकुलाध्ययनात् परं विश्वविद्यालयेप्यध्ययनपरम्परा सृष्टा विद्यते। अत्र छात्राः अध्ययनं कृत्वा पारम्परिकविद्यायाः लौकिकविद्यासमकक्षं प्रमाणपत्रं योग्यतां च सम्पादयन्तः सन्ति। तथैव पारम्परिकविद्यायाः शोधोपि क्रियते।

वैदिकाः विद्यावारिध्यादि उपाधिं प्राप्य विश्वविद्यालयेषु अध्यापकत्वं तथा शोधकर्तृरूपेण विद्यमानाः सन्ति। एवं प्रकारेण कालानुगुण्येन गुरुपरम्परायाः रक्षणं कुर्वन्तः आधुनिकविद्याक्षेत्रे वेदविद्यायाः प्रतिष्ठां प्रचारं शोधञ्च कर्तुमिदमेव विधानमुपयुक्तमिति मन्ये। केचन लोपदोषाः सन्ति परन्तु तान् दूरीकर्तुं प्रयत्नोपि करणीयः। परन्तु वैदिकविद्यायाः साम्प्रदायिकरूपेण विश्वविद्यालयस्तरे अध्ययनमाधुनिककालस्य प्रस्तुतत्वमिति मन्ये।

वैदिकविद्यायाः अध्ययनं न केवलं ब्राह्मणानां त्रैवर्णिकानामपि करणीया वर्तते। इतरेषामपि वेदाक्षराणामध्ययनं विना वेदगततत्वानां , वेदकथानां वेदसम्बद्धविचाराणां ज्ञानप्राप्तिर्यथा भवेत्तथा ते अपि शिक्षयितव्या इति ममाभिप्रायः। वेदस्य पठनपाठनपरम्परा अवश्यं पालयितव्या। अलौकिकविद्यात्वात् ब्रह्मविद्यात्वाच्च तस्य गरिमा तथा पावित्र्यस्य ज्ञानं सर्वदा सर्वथा अनुसरणीया । गुरुशिष्ययोस्संवादः प्रवर्द्धनीयः। वेदविषयिकज्ञानस्य प्रचारप्रसाराय शोधार्थञ्च छात्राः प्रवर्तयितव्याः। वैदिकपुस्तकानां अनुपलब्धिश्चिन्तायाः विषयः अस्ति। उपलब्ध्या छात्राणां मनोबलं बर्धते। प्राचीनकालादागता विद्या संरक्षणीया तथा आधुनिकसंसाधनानामुपयोगः अपि करणीयः। अनया वैदिकिविद्याप्रणाल्याः उत्कृष्टः परिणामः अवश्यं लभ्यते। इति शम्।।

सन्दर्भग्रन्थाः-


1.गौतमधर्मसूत्राणि-डा उमेशचन्द्र पाण्डेय, चौखम्बसंस्कृतसंस्थान, वाराणसी, विक्रमसंवत् 2056

2.नारदीयशिक्षा- सम्पादकः,डा गिरिजाप्रसाद षडङ्गी, तिरुपति, 2014

3. छान्दोग्यमन्त्रब्राह्मणम्- प्रकाशकः. व.रा.लक्ष्मीकान्त शर्मा, कुम्भकोणम्, 1980

4. वैदिकवाङ्मय इतिहास- भगवद्दत्तः, चौखम्बसंस्कृतसस्थान, वाराणसी

5. वैदिकसाहित्य और संस्कृति- लेखकः . वाचस्पति गैरोला, चौखम्बा संस्कृत प्रतिष्ठान, दिल्ली,1997